


वाचावेदान्ति दुर्दान्त दर्प निर्दलनक्षमः।असङ्गानन्दयोगीन्द्रो गुरुर्विजयते तराम्॥

एष आगच्छति श्रीमानसङ्गानन्द केसरी।दूरं धावत दर्पान्धा शुष्कवेदान्त दन्तिनः॥

ॐ

# श्री सद्गुरु महर्षि मलयाळ यतीन्द्र सहस्रनामावलिः

रचयिता

"साहित्य - वेदान्ताचार्य"

कृष्णचरण एम.ए.पिहेच डी.

चातुर्मास्य महाव्रताश्रमम्

वीरभद्रपुरम्, राजमन्ड्री.

प्रकाशक

ताडेपल्ली पेद्दाश्रमम् वालों,

पामूरु सुब्बम्माजी

कनुपर्तिपाडु




Coputerized by: Swami Brahmavidyananda and Ajay Chaitanya

कम्प्यूटरैजड: स्वामी ब्रह्मविद्यानन्द और अजय चैतन्य

Sri Malayalaswami Ashram,

Solapur,MH.

# विषयसूचिका

**विषय** **पृष्ट**





**कृष्णं वन्दे जगद्गुरुम्**

## श्री गुर्वष्टकम्

नमस्ते भक्तसंपूज्य!सम्यग्ज्ञानवतां वर!।
भक्तेच्छोपात्तरूपाय गुरुदेव नमोस्तुते॥1॥

नमस्तेऽसङ्गरूपाय नमस्संसृतिहारिणे।
नमोऽस्तु द्वैतदूराय छिन्नबन्धाय ते नमः॥2॥

ब्रह्मात्माभावसंपूर्ण ! ब्रह्मज्ञानप्रबोधक।
विज्ञानहेतिविच्छन्नकर्मबंधाय ते नमः॥3॥

अनघायप्तकामाय पूर्णबोधाय ते नमः।
अनन्यभक्तदैवाय गुरुवेऽनन्तशक्तये ॥4॥

तीव्रवैराग्ययुक्ताय वशीमुद्राङ्किताय च ।
नमस्तेऽसंङ्गरूपाय ! गुरुवेज्ञप्तिरूपिणे ॥5॥

असङ्गानन्दयोगीश ! सद्गुरो! पूतभावन।
नमस्ते त्यक्तसर्वाश ! लोकसङ्ग्रह जीवन ॥6॥

तीर्थभूतपदाम्भोज ! समुत्तीर्णभवार्णव !।
जितकाम! सदाशान्त ! नमस्ते त्यागिसत्तम॥7॥

यतीश्वराय महते मोहध्वान्तापहारिणे ।
आत्मानन्दविहाराय मुक्तसङ्गाय ते नमः॥8॥

गुर्वष्टकमिदं पूतं यः पठेद्भक्ति तत्परः।
गुरुदैवतभावेनमुक्तो भवति बन्धकः ॥9॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

@@@@@

ॐ

**असङ्गानन्दाष्टकम्**

1. अखण्डतेज मण्डितं सुभक्तकोटि सेवितम्।
सदा प्रसन्न मानसं असङ्गदेशिकं भजे॥

2.अनन्तसौख्यदायकं विलीन दृश्यमण्डलम्।
सुलब्धदृक्स्वरूपकं असङ्ग सद्गुरुं भजे॥

3.अखर्व शक्तिदीपकं अकुण्ठित प्रभानिधिम्।
जगत्तमः प्रभञ्जकं असङ्ग सद्गुरुं भजे॥

4.समस्त लोकपावनं सुशिक्षण प्रदायिनम्।
अनल्पदुःखदूरकं असङ्गदेशिकं भजे॥

5. अशेष छात्रवन्दितं सुसाधुसेव्यमानसम्।
विरक्तलोकपालकं असङ्ग सद्गुरुं भजे॥

6. अधीत वेदसंततिं मुमुक्षु कल्प पादपम्।
अजन्ममार्ग दीपकं असङ्गदैवतं भजे॥

7. पुनीतमार्ग दर्शकं सुनीतिवृद्धि कारकम्।
असङ्गदेशिकोत्तमं सदा हृदि प्रपूजये॥

8. विशुद्धतत्त्वकोविदं दुरन्त बन्ध मोचनम्।
असङ्गदेशिकं विभुं पुनः पुनर्नमाम्यहम्।।

9. गुर्वष्टकमिदं पुण्यं यः पठेद्भक्तिसंयुतः।
तस्य शोक भयं नास्ति सर्वत्र विजयी भवेत्।।

इति श्री विद्याप्रकाशानन्दयति विरचितं श्री असङ्गानन्द गुर्वष्टकं संपूर्णम्।।

*************** **************

श्लो।। शुष्कवेदान्तदन्तीश बृन्दसन्तापहारिणे।
असङ्गानन्द योगीन्द्रो गुरुर्विजयतेतराम्।।

श्लो।।श्री नारायण गुर्वाद्यां शिवलिङ्गार्य मध्यमाम्।
असङ्गानन्द पर्यन्तां वन्दे गुरु परम्पराम्।

श्लो।। यस्य प्रसादादहमेव सर्वं
मय्येव सर्वं परिकल्पितं च।
इत्थं विजानामि सदात्मरूपं
तस्याङ्घ्रि पद्मं प्रणतोऽस्मि नित्यम्।।

श्लो।।अतीत वैराग्यमखणडबोध
कदा नु मे सिद्ध्यति हे दयालो।
समाधि योगस्य परस्य निष्ठा
सर्वेषु भूतेषु समत्व बुद्धिः।।

श्लो।।नानुष्ठानात्परं कार्यं त्रिषुलोकेषु विद्यते।
सत्यं सत्यं पुनः सत्यं इति मामक भाषितम्।।

ॐ तत्सत् ॐ

*************************************************

**--: ध्यानम् :--**

ॐ वन्दे नैजपदानुबोधनरतं वन्दे यतीनां विभुं,
वन्दे नन्दिगिरीन्द्रपार्श्वनिलयं वन्दे महाशान्तिदम्।
वन्दे व्यासमुनीन्द्र तत्त्वबहुलं व्यासाश्रमस्थापकं,
वन्दे श्रीमलयालसद्गुरुवरं वन्दे जगत्पावकम्॥

श्लोक॥असङ्गानन्दरूपाय गुरवे ग्रन्थिभेदिने ।
कर्मालिप्ताय ऋषये नमोऽस्तु ब्रह्मरूपिणे ॥

***

ॐ

## श्री सद्गुरु महर्षि मलयाळ यतीन्द्र सहस्रनामावलिः

१. ॐ श्री सद्गुरुदेवाय नमः
२. ॐ अकल्मषजीवनाय नमः
३. ॐ अकामविहताय नमः
४. ॐ अकुतोभयाय नमः
५. ॐ अकुण्ठमेधाशालिने नमः
६. ॐ अकुण्ठितदृढव्रताय नमः
७. ॐ अखण्डतेजोमण्डिताय नमः
८. ॐ अखण्डपूजार्चिताय नमः
९. ॐ अखण्डाङ्घ्रिपूजा विस्मारिताखण्डल वैभवाय नमः
१०. ॐ अखण्डात्मस्वरूपाय नमः
११. ॐ अगणितगुणराशये नमः
१२. ॐ अगणितभक्तजननुताय नमः
१३. ॐ अगाधबोधाम्बुधये नमः
१४. ॐ अघौघनिवर्तनाय नमः

१५. ॐ अचलवादतमो भास्कराय नमः
१६. ॐ अचलमनो बुद्धीन्द्रियाय नमः
१७. ॐ अचिन्त्यवैभवाय नमः
१८. ॐ अजातशत्रवे नमः
१९. ॐ अज्ञानतिमिरप्रदीपाय नमः
२०. ॐ अज्ञानध्वान्तभेत्रे नमः
२१. ॐ अतन्द्रितेन्द्रियाय नमः
२२. ॐ अतुलश्रद्धासमन्विताय नमः
२३. ॐ अतुलसन्तुष्टिसंयुताय नमः
२४. ॐ अतुल्य मेधासम्पद्भासिताय नमः
२५. ॐ अतृप्ततपोव्रताय नमः
२६. ॐ अतृप्तबोधपीयुषवर्षिणे नमः
२७. ॐ अद्वय ब्रह्मरूपाय नमः
२८. ॐ अद्वैत मतोद्धारकाय नमः
२९. ॐ अद्वैत ज्ञानप्रदात्रे नमः
३०. ॐ अद्वैत प्रचारादिशङ्कराय नमः
३१. ॐ अद्भुत दर्शनाय नमः
३२. ॐ अद्भुत चरिताय नमः
३३. ॐ अद्भुत कर्मणे नमः
३४. ॐ अध्यात्मप्रदीपाय नमः
३५. ॐ अध्यात्मपदमहाधिकारिणे नमः
३६. ॐ अध्यात्मज्ञानसम्पन्नाय नमः
३७. ॐ अनवद्यात्मचरिताय नमः
३८. ॐ अनघचरिताय नमः
३९. ॐ अनन्तभक्तोपेताय नमः
४०. ॐ अनन्ताश्रमस्थापकाय नमः
४१. ॐ अनन्यभावभासुराय नमः

४२. ॐ अनल्पप्रभावाय नमः
४३. ॐ अन्तर्वाणीप्रेरितत्यक्तमुमूर्षुभावाय नमः
४४. ॐ अन्नदानप्रियाय नमः
४५. ॐ अन्वर्थसच्छिष्याय नमः
४६. ॐ अनासक्ति योगपुङ्गवाय नमः
४७. ॐ अनाथपोषकाय नमः
४८. ॐ अनीहाचरितसर्वकर्मणे नमः
४९. ॐ अनुष्ठानप्रियाय नमः
५०. ॐ अनुत्तमसद्गुरुपदाधिष्ठिताय नमः
५१. ॐ अनुष्ठितमौनव्रताय नमः
५२. ॐ अनुष्ठानोपदिष्टधर्ममर्माय नमः
५३. ॐ अनुपमकीर्तीशोभिताय नमः
५४. ॐ अनुपमाध्यात्मिककेन्द्रस्थापकाय नमः
५५. ॐ अनुकम्पितस्त्रीशूद्राय नमः
५६. ॐ अनुकरणीयाचरणाय नमः
५७. ॐ अनुल्लङ्घितशासनाय नमः
५८. ॐ अनृतभवाब्धिपोताय नमः
५९. ॐ अपध्वस्तसमस्तकिल्बिषाय नमः
६०. ॐ अपरसूतमहर्षिणे नमः
६१. ॐ अपरिवर्तितनियमव्राताय नमः
६२. ॐ अपरोक्षज्ञानसम्पन्नाय नमः
६३. ॐ अपहतपाप्मने नमः
६४. ॐ अपास्ताश्रितनिखिलपापाय नमः
६५. ॐ अभ्यस्ताष्टाङ्गयोगाय नमः
६६. ॐ अभीष्टमन्त्रोपदेष्ट्रे नमः
६७. ॐ अभेददर्शिने नमः
६८. ॐ अमरविद्यातपोविस्तारकाय नमः

६९. ॐ अमृतभाषिणे नमः
७०. ॐ अमृतपदाधिष्ठिताय नमः
७१. ॐ अमोघवाञ्छिताय नमः
७२. ॐ अमोघवचनाय नमः
७३. ॐ अयाचितव्रतभूषिताय नमः
७४. ॐ अवक्रपराक्रमाय नमः
७५. ॐ अवबोधैकरुपाय नमः
७६. ॐ अवहितचेतसे नमः
७७. ॐ अव्ययानन्दधाम्ने नमः
७८. ॐ अवितथसङ्कल्पाय नमः
७९. ॐ अविचलितेन्द्रियाय नमः
८०. ॐ अविकत्थनप्रियाय नमः
८१. ॐ अविरतध्यानानुष्ठानाय नमः
८२. ॐ अशरणशरणाय नमः
८३. ॐ अशेषाशुभहराय नमः
८४. ॐ असदृशव्रताढ्याय नमः
८५. ॐ असङ्गानन्दमौनिने नमः
८६. ॐ अस्तोकचरिताय नमः
८७. ॐ अहिंसाधर्मप्रबोधकाय नमः
८८. ॐ आगन्तुकक्षुन्निवारकाय नमः
८९. ॐ आगमाचार शोभिताय नमः
९०. ॐ आगमाचार संवेदिने नमः
९१. ॐ आचरणव्यक्त गीतातत्त्वाय नमः
९२. ॐ आच्छदनैक परिग्रहाय नमः
९३. ॐ आत्मज्योति प्रज्वालकाय नमः
९४. ॐ आत्मज्ञान प्रचारकाय नमः
९५. ॐ आत्मदर्शिने नमः

९६. ॐ आत्मबलाकृष्ट सर्वान्ध्रलोकाय नमः
९७. ॐ आत्मभावसंस्थिताय नमः
९८. ॐ आत्मवस्तुसम्पन्नाय नमः
९९. ॐ आत्मविद्याविशारदाय नमः
१००. ॐ आत्मशक्त्युपब्रुंहिताय नमः
१०१. ॐ आत्मसन्दर्शननिर्वृत्तेन्द्रियाय नमः
१०२. ॐ आत्मारामाय नमः
१०३. ॐ आत्मानुभवतुष्टात्मने नमः
१०४. ॐ आदर्शचरिताय नमः
१०५. ॐ आदर्शभावाय नमः
१०६. ॐ आदर्शमूर्तये नमः
१०७. ॐ आदर्शोत्तमपरमहंसाय नमः
१०८. ॐ आध्यात्मिक विभूतये नमः
१०९. ॐ आन्ध्रवियद्ज्ञानदिवाकराय नमः
११०. ॐ आन्ध्रोद्धाराधृतदेहाय नमः
१११. ॐ आन्ध्रोधारकाय नमः
११२. ॐ आधिव्याधिविदाहकाय नमः
११३. ॐ आनन्दनिलयाय नमः
११४. ॐ आपत्पदरहिताय नमः
११५. ॐ आप्तकामाय नमः
११६. ॐ आपामरसुलभप्रबोधनचतुराय नमः
११७. ॐ आर्तजनसंरक्षकाय नमः
११८. ॐ आर्षधर्मप्रतिरूपाय नमः
११९. ॐ आर्षधर्मप्रवर्तकाय नमः
१२०. ॐ आर्षमतोद्धारकाय नमः
१२१. ॐ आराध्यचरणाय नमः
१२२. ॐ आरामीकृतदुर्गमारण्याय नमः

१२३. ॐ आर्षाचार्याय नमः
१२४. ॐ आरूढसमाधियोगाय नमः
१२५. ॐ आलस्यारिमर्दनाय नमः
१२६. ॐ आश्रमसर्वस्वाय नमः
१२७. ॐ आश्रितशरणाय नमः
१२८. ॐ आश्रितवत्सलाय नमः
१२९. ॐ आश्रितभयहरणाय नमः
१३०. ॐ इद्धचरिताय नमः
१३१. ॐ इन्द्राधिकवैभवाय नमः
१३२. ॐ इन्द्रियदमनाय नमः
१३३. ॐ ईड्यगुणग्रामाय नमः
१३४. ॐ ईश्वररूपाय नमः
१३५. ॐ ईश्वरायत्तचित्ताय नमः
१३६. ॐ ईषत्स्मितदीप्तास्याय नमः
१३७. ॐ उक्ताचरणतत्पराय नमः
१३८. ॐ उक्ताचरितबोधकाय नमः
१३९. ॐ उच्छाटितोन्मत्तपिशाचाय नमः
१४०. ॐ उज्ज्वलचरिताय नमः
१४१. ॐ उत्तमश्लोकाय नमः
१४२. ॐ उत्तमब्रह्मवादिने नमः
१४३. ॐ उत्तमानन्दवर्धनाय नमः
१४४. ॐ उत्तप्तप्राकृतजनबान्धवाय नमः
१४५. ॐ उदात्ततपोव्रताय नमः
१४६. ॐ उदात्तचित्ताय नमः
१४७. ॐ उदारकरुणारसाब्धये नमः
१४८. ॐ उदारचरिताय नमः
१४९. ॐ उदासीनमानसाय नमः

१५०. ॐ उद्दामयशोशोभिताय नमः
१५१. ॐ उद्घोषितस्त्रैणगीतापठनाधिकाराय नमः
१५२. ॐ उन्मनीभावभासिताय नमः
१५३. ॐ उपकृतिपरायणाय नमः
१५४. ॐ उपरतेन्द्रियाय नमः
१५५. ॐ उपलब्धिमात्रस्वरूपाय नमः
१५६. ॐ उपशान्तचित्ताय नमः
१५७. ॐ उपेक्षितविषयव्राताय नमः
१५८. ॐ उर्ध्व रेतसे नमः
१५९. ॐ ऊहापोहविचक्षणाय नमः
१६०. ॐ ऋजुवर्तनाय नमः
१६१. ॐ ऋणत्रयविमुक्ताय नमः
१६२. ॐ ऋतम्भरीप्रज्ञान्विताय नमः
१६३. ॐ ऋतसम्भाषिणे नमः
१६४. ॐ ऋद्धिप्रदाय नमः
१६५. ॐ ऋषियज्ञारम्भकाय नमः
१६६. ॐ ऋषिवंशसंवर्धकाय नमः
१६७. ॐ ऋषिवंशसंस्मारकाय नमः
१६८. ॐ ऋषिवर्त्मानुवर्तनाय नमः
१६९. ॐ ऋषिसत्तमाय नमः
१७०. ॐ ऋषिसन्तानोद्बोधकाय नमः
१७१. ॐ एकाग्रमानसाय नमः
१७२. ॐ एकान्तवासिने नमः
१७३. ॐ एकैकात्मविज्ञानिनै नमः
१७४. ॐ ऐहिकभोगविदूराय नमः
१७५. ॐ ओङ्काररूपाय नमः
१७६. ॐ ओङ्कारसत्रारम्भकाय नमः

१७७. ॐ ओजोमूर्तये नमः
१७८. ॐ औदासीन्यभावाय नमः
१७९. ॐ औपनिषद्ज्ञानभासिताय नमः
१८०. ॐ अम्बुजलोचनाय नमः
१८१. ॐ अहरहर्ध्यानिने नमः
१८२. ॐ कमनीयगुणालयाय नमः
१८३. ॐ कन्यागुरुकुलस्थापकाय नमः
१८४. ॐ कर्मतत्त्वज्ञाय नमः
१८५. ॐ कर्मबन्धविमोचकाय नमः
१८६. ॐ कर्मयोगिने नमः
१८७. ॐ कर्मयोगप्रबोधनगान्धिदेवाय नमः
१८८. ॐ कर्मानुद्विग्नमानसाय नमः
१८९. ॐ करुणावरुणालयाय नमः
१९०. ॐ कर्तृत्वभावरहिताय नमः
१९१. ॐ कलङ्करहिताय नमः
१९२. ॐ कल्मषगरलगङ्गाधराय नमः
१९३. ॐ कल्मषान्धतमसमहोद्यद्दीपाय नमः
१९४. ॐ कल्याणगुणनिधानाय नमः
१९५. ॐ कलिकल्मषहराय नमः
१९६. ॐ कलिकृतकल्मषहारिणे नमः
१९७. ॐ कामनारहिताय नमः
१९८. ॐ कामादिवर्गमहोग्रवनिकुठाराय नमः
१९९. ॐ कामितार्थदायकाय नमः
२००. ॐ कारणजन्मने नमः
२०१. ॐ कारुण्यसागराय नमः
२०२. ॐ कारुण्यवारान्निधये नमः
२०३. ॐ कारुणिकोत्तमाय नमः

२०४. ॐ कालानुगुणभावाय नमः
२०५. ॐ कालाभिज्ञाय नमः
२०६. ॐ काशीबुग्ग सुतीर्थनिलयाय नमः
२०७. ॐ काषायाम्बरधारिणे नमः
२०८. ॐ क्रान्तिकरविचारभासुराय नमः
२०९. ॐ कुक्षिम्भरसाधुभयङ्कराय नमः
२१०. ॐ कृतकृत्यभावसंतृप्ताय नमः
२११. ॐ कृताखिलकर्तव्याय नमः
२१२. ॐ कृपाविशालाय नमः
२१३. ॐ 'कृष्णचरणा'र्चितपादपद्माय नमः
२१४. ॐ 'कूर्मसर'स्तीरवासिने नमः
२१५. ॐ क्रूरजन्तुक्रौर्यनिवारकाय नमः
२१६. ॐ केरलावनिसञ्जाताय नमः
२१७. ॐ क्लेशसंहारकाय नमः
२१८. ॐ कैवल्यदात्रे नमः
२१९. ॐ कैवल्यपदभागिने नमः
२२०. ॐ खण्डितसन्तापाय नमः
२२१. ॐ खण्डिताघौघाय नमः
२२२. ॐ खलविदूराय नमः
२२३. ॐ ख्यातकीर्तये नमः
२२४. ॐ गम्भीरहृदयाय नमः
२२५. ॐ गर्हितात्मस्तोत्राय नमः
२२६. ॐ ग्रन्थिच्छेददक्षाय नमः
२२७. ॐ गीताप्रबोधकाय नमः
२२८. ॐ गीतार्थप्रवक्त्रे नमः
२२९. ॐ गीर्वाणभाषापोषकाय नमः
२३०. ॐ गुणग्रामयुक्ताय नमः

२३१. ॐ गुणजातिवादनिरूपकाय नमः
२३२. ॐ गुणज्ञाग्रगण्याय नमः
२३३. ॐ गुणरत्ननिधये नमः
२३४. ॐ गुणस्तोमधाम्ने नमः
२३५. ॐ गुणातीताय नमः
२३६. ॐ गुर्वर्कलब्धोपनिषत्सुचक्षुषे नमः
२३७. ॐ गुर्वनुग्रहवर्धिताय नमः
२३८. ॐ गुर्वाज्ञानुवर्तिने नमः
२३९. ॐ गुरुकुलोचितकुलपतये नमः
२४०. ॐ गुरुकृपालब्धब्रह्मपदाय नमः
२४१. ॐ गुरुतरकार्यभारानुद्विग्नाय नमः
२४२. ॐ गुरुतरशक्तियुक्ताय नमः
२४३. ॐ गुरुदैवतभावाय नमः
२४४. ॐ गुरुनिर्देशितश्रुतितत्त्वाय नमः
२४५. ॐ गुरुपदारूढाय नमः
२४६. ॐ गुरुभवदुःखप्रवाहप्लवाय नमः
२४७. ॐ गुरुभक्तिनिष्णाताय नमः
२४८. ॐ गुरुभक्तियुक्ताय नमः
२४९. ॐ गृहसुखविमुखाय नमः
२५०. ॐ गोगर्भगुहाविर्भूतविज्ञानभास्कराय नमः
२५१. ॐ घनकृपाकराय नमः
२५२. ॐ घनदुर्जन्मदलनदक्षाय नमः
२५३. ॐ घृणभावशून्याय नमः
२५४. ॐ घोरतरतपश्चारिणे नमः
२५५. ॐ घोरविपद्रक्षकाय नमः
२५६. ॐ घोरसंसृतितरणाय नमः
२५७. ॐ घोरसंसारसागरतारकाय नमः

२५८. ॐ घोराविद्याहन्तकाय नमः
२५९. ॐ चतुर्योगप्रचारकाय नमः
२६०. ॐ चराचरहितैषिणे नमः
२६१. ॐ चलचित्तनिरोधकाय नमः
२६२. ॐ चलचित्तचपलताहारिणे नमः
२६३. ॐ चातुर्मास्यव्रतप्रचारकाय नमः
२६४. ॐ चारुचरिताय नमः
२६५. ॐ चारुतरयशोविशालाय नमः
२६६. ॐ चारुप्रसन्नवदनाय नमः
२६७. ॐ चारुहासनिरीक्षणाय नमः
२६८. ॐ चित्तकल्मषदहनाय नमः
२६९. ॐ चित्पदाधिष्ठिताय नमः
२७०. ॐ चित्सुखसागरविहारिणे नमः
२७१. ॐ चिन्मयस्वरूपाय नमः
२७२. ॐ चिन्मयाकाराय नमः
२७३. ॐ चिरस्थिरप्रवचनचतुराय नमः
२७४. ॐ छलविदूराय नमः
२७५. ॐ छद्मसन्त्यक्तगेहाय नमः
२७६. ॐ छिन्नबन्धनाय नमः
२७७. ॐ छिन्नसंशयाय नमः
२७८. ॐ जगद्गुरुदेवाय नमः
२७९. ॐ जगन्मान्यक्रियाचाराय नमः
२८०. ॐ जनतापूजितनिजपदाय नमः
२८१. ॐ जनताराध्यदेवाय नमः
२८२. ॐ जनहितानेककर्मकराय नमः
२८३. ॐ जननीस्मरणविक्लिन्नहृदयाय नमः
२८४. ॐ जन्मजातिवादनिरासकाय नमः

२८५. ॐ जनिमृतिभयापहाय नमः
२८६. ॐ जरत्तपस्विने नमः
२८७. ॐ जर्जरितगात्राय नमः
२८८. ॐ ज्वलदात्म तेजसे नमः
२८९. ॐ जातिद्वेषापहारकाय नमः
२९०. ॐ ज्ञानमार्गनिरूढाय नमः
२९१. ॐ ज्ञानविज्ञानसम्पन्नाय नमः
२९२. ॐ ज्ञानविज्ञानसंतृप्ताय नमः
२९३. ॐ ज्ञानविध्वस्तकल्मषाय नमः
२९४. ॐ ज्ञानविधूतमोहाय नमः
२९५ ॐ ज्ञानसंछिन्नसंशयाय नमः
२९६. ॐ ज्ञानाग्निदग्धकर्मणे नमः
२९७. ॐ ज्ञानानन्दस्वरूपाय नमः
२९८. ॐ ज्ञानामृतप्रदात्रे नमः
२९९. ॐ जितपवनाय नमः
३००. ॐ जितमनस्काय नमः
३०१. ॐ जितासनाय नमः
३०२. ॐ जितेन्द्रियवर्याय नमः
३०३. ॐ जीवतापापनोदप्रवृत्ताय नमः
३०४. ॐ जीवन्मुक्तसत्तमाय नमः
३०५. ॐ झटित्यात्मसंदर्शनसंम्मोदिताय नमः
३०६. ॐ टङ्कारहितस्वभावस्वरूपिणे नमः
३०७. ॐ ठक्कुराराधनचेतसे नमः
३०८. ॐ डमरुकपाण्यंशसम्भूताय नमः
३०९. ॐ ढुण्डिराजार्चनप्रवणाय नमः
३१०. ॐ तत्त्वाभिज्ञाय नमः
३११. ॐ तत्त्वोपदेशतत्पराय नमः

३१२. ॐ तत्त्वमस्यादिलक्ष्यार्थाय नमः
३१३. ॐ तपःपूतकायाय नमः
३१४. ॐ तपस्स्वाध्यायसंयुताय नमः
३१५. ॐ तपोदग्धकर्मबीजाय नमः
३१६. ॐ तपोवेषोपजीविभयङ्कराय नमः
३१७. ॐ तपोवैफल्यतनुत्यागसन्नद्धाय नमः
३१८. ॐ त्यक्तसर्वाशाय नमः
३१९. ॐ त्यक्तानन्तवैभवाय नमः
३२०. ॐ त्यक्तेषणाय नमः
३२१. ॐ तात्त्विकश्रेष्ठाय नमः
३२२. ॐ तापसवर्याय नमः
३२३. ॐ तापत्रयहराय नमः
३२४. ॐ तितीक्षासमन्विताय नमः
३२५. ॐ त्रिगुणातीताय नमः
३२६. ॐ तीर्थभूताङ्घ्रिपद्माय नमः
३२७. ॐ 'तुम्बुरुतीर्था'नुसेविने नमः
३२८. ॐ तुर्याश्रमविभूषणाय नमः
३२९. ॐ तुरीयपदसंस्थिताय नमः
३३०. ॐ तुल्यनिन्दास्तुतिगुणाय नमः
३३१. ॐ तुल्यश्रुततपश्शीलाय नमः
३३२. ॐ तुल्यसुखविसुखाय नमः
३३३. ॐ तुल्यारिमित्रभावाय नमः
३३४. ॐ तृप्तचित्ताय नमः
३३५. ॐ तृष्णारहिताय नमः
३३६. ॐ स्थण्डिलशयनाय नमः
३३७. ॐ स्थितप्रज्ञरूपाय नमः
३३८. ॐ स्थिरैकासनसंस्थिताय नमः

३३९. ॐ दग्धकामपटलाय नमः
३४०. ॐ दम्भरहिताय नमः
३४१. ॐ दयार्द्रहृदयाय नमः
३४२. ॐ दयाभाव बुद्धदेवाय नमः
३४३. ॐ दर्शितात्मप्रभावाय नमः
३४४. ॐ दर्शितापवर्गमार्गाय नमः
३४५. ॐ दर्शितापवर्गफलसाधनाय नमः
३४६. ॐ द्रष्टुस्वरूपाय नमः
३४७. ॐ द्वन्द्वभावनिर्मुक्ताय नमः
३४८. ॐ द्वन्द्वातीताय नमः
३४९. ॐ दान्तस्वान्ताय नमः
३५०. ॐ द्वादशवर्षतपश्चारिणे नमः
३५१. ॐ द्वादशवर्षतप:पूताय नमः
३५२. ॐ दिव्यमङ्गलविग्रहाय नमः
३५३. ॐ दीनवत्सलाय नमः
३५४. ॐ दीनोद्धारकृतपरिग्रहाय नमः
३५५. ॐ दीपितयशोविशालाय नमः
३५६. ॐ दीर्घजवनाय नमः
३५७. ॐ दुःखक्षयार्थसन्त्यक्तगेहाय नमः
३५८. ॐ दुःखितोद्धारकल्पिताश्रमाय नमः
३५९. ॐ दुरन्तचिन्तानिर्मुक्ताय नमः
३६०. ॐ दुराग्रहविदूराय नमः
३६१. ॐ दुर्वादान्धतमसप्रचण्डभास्कराय नमः
३६२. ॐ दुरितदूराय नमः
३६३. ॐ दुर्गुणदलनाशनिहृदयाय नमः
३६४. ॐ दुश्चरतपश्चर्याभ्यसूयितमुनिगणाय नमः
३६५. ॐ दुश्चरतपस्साधितस्वाभीष्टाय नमः

३६६. ॐ दुस्तरसंसारसिन्धुतरणप्लवाय नमः
३६७. ॐ दुस्तरभवाम्बुधि निस्तरण कर्णधाराय नमः
३६८. ॐ दुस्सहनियम शोभिताय नमः
३६९. ॐ दृढव्रतासनाढ्याय नमः
३७०. ॐ दृश्यविलक्षणाय नमः
३७१. ॐ दूरीकृतषड्वर्गाय नमः
३७२. ॐ देशकालार्थतत्त्वज्ञाय नमः
३७३. ॐ देशजागरणनिपुणाय नमः
३७४. ॐ देशिककुलचन्द्रमसे नमः
३७५. ॐ देशोद्धारकाय नमः
३७६. ॐ देहभावविदूराय नमः
३७७. ॐ देहाभिमानरहिताय नमः
३७८. ॐ दैवमार्गनिरतस्वान्ताय नमः
३७९. ॐ दैवार्पितहृदयाय नमः
३८०. ॐ द्वैतभावविदूराय नमः
३८१. ॐ धन्यजीवनाय नमः
३८२. ॐ धर्मज्ञधुरीणाय नमः
३८३. ॐ धर्मज्ञानशमोपेताय नमः
३८४. ॐ धर्मनिवहैकत्व बोधकाय नमः
३८५. ॐ धर्मप्रवर्तकाय नमः
३८६. ॐ धर्ममर्मज्ञाय नमः
३८७. ॐ धर्ममार्गानुवर्तिने नमः
३८८. ॐ धर्मविस्तारकाय नमः
३८९. ॐ ध्वस्तान्त:क्लेशाय नमः
३९०. ॐ धार्मिकश्रेष्ठाय नमः
३९१. ॐ ध्यानिवृत्ताशेषवृत्तये नमः
३९२. ॐ ध्यानध्वस्तसमस्तवासनाय नमः

३९३. ॐ ध्यानप्रभावोद्ग्रथितात्मबन्धनाय नमः
३९४ ॐ ध्यानप्राधान्य बोधकाय नमः
३९५. ॐ धीरविचारभासुराय नमः
३९६. ॐ धीरस्वभावाय नमः
३९७. ॐ ध्येयस्थितिसंस्थिताय नमः
३९८. ॐ नगोद्धरणनिरूढधैर्याय नमः
३९९. ॐ नतानेकभक्ताय नमः
४००. ॐ नन्दिपर्वतोपान्तवासिने नमः
४०१. ॐ नयधर्मविचक्षणाय नमः
४०२. ॐ नयविभवसमृद्धाय नमः
४०३. ॐ नव्यक्रान्तिकारिणे नमः
४०४. ॐ नष्टसन्देहवृत्तये नमः
४०५. ॐ निखिलपुण्यैकसदनाय नमः
४०६. ॐ निखिलविकारदूराय नमः
४०७. ॐ निखिलात्मदर्शिने नमः
४०८. ॐ निगमार्थकोविदाय नमः
४०९. ॐ निगूढात्मवेदिने नमः
४१०. ॐ निजमार्गसंस्थिताय नमः
४११. ॐ निजस्वरूपब्रह्मविहाराय नमः
४१२. ॐ नित्यकल्याणनिधये नमः
४१३. ॐ नित्यध्यानपारीणाय नमः
४१४. ॐ नित्यनिरस्तकल्मषाय नमः
४१५. ॐ नित्यनिवृत्तमायिकाय नमः
४१६. ॐ नित्यनूतनकार्यारम्भकाय नमः
४१७. ॐ नित्यनूतनोत्साहसमन्विताय नमः
४१८. ॐ नित्यनैमित्तिकाचारनिपुणाय नमः
४१९. ॐ नित्यपुण्यविचाराय नमः

४२०. ॐ नित्यभक्तसमावृताय नमः
४२१. ॐ नित्यमङ्गलरूपाय नमः
४२२. ॐ नित्यमुक्ताय नमः
४२३. ॐ नित्यविभूतिभासितफालाय नमः
४२४. ॐ नित्यशीलितनियतव्राताय नमः
४२५. ॐ नित्यसुखबोधविलीनाय नमः
४२६. ॐ नित्यात्मबुद्धिभासिताय नमः
४२७. ॐ नित्यानन्दपदस्थिताय नमः
४२८. ॐ नित्यनन्दलोलाय नमः
४२९. ॐ नित्यान्नदानतत्पराय नमः
४३०. ॐ नित्यापूरितसुजनानन्दाय नमः
४३१. ॐ नित्यानुकम्पानिधये नमः
४३२. ॐ नित्यानुष्ठाननिरताय नमः
४३३. ॐ नित्यानुष्ठानवरिष्ठाय नमः
४३४. ॐ नित्यैकाम्बरधराय नमः
४३५. ॐ नित्यैक्यानुसन्धायकाय नमः
४३६. ॐ नित्योत्सवधाम्ने नमः
४३७. ॐ नित्योषितपर्णशालाय नमः
४३८. ॐ निदिध्यासनायत्तचित्ताय नमः
४३९. ॐ निमित्तमात्रकर्तृत्वाय नमः
४४०. ॐ नियतकालानुवर्तिने नमः
४४१. ॐ नियतसम्भाषणाय नमः
४४२. ॐ नियतस्नानशयनाशनाय नमः
४४३. ॐ नियमाचरणपरितोषणाय नमः
४४४. ॐ निरपेक्षस्वान्ताय नमः
४४५. ॐ निरपेक्षिकदृष्टश्रुतसुखलेशाय नमः
४४६. ॐ निरवधिकविमलतेजोमूर्तये नमः

४४७. ॐ निरवधिनिजबोधस्वरूपाय नमः
४४८. ॐ निरस्तनिखिलध्वान्ताय नमः
४४९. ॐ निरस्तसमस्तमायान्धकाराय नमः
४५०. ॐ निरस्तहृदयतापाय नमः
४५१. ॐ निरस्ताभिमानाय नमः
४५२. ॐ निरहङ्काराय नमः
४५३. ॐ निर्गर्वभावाय नमः
४५४. ॐ निर्दग्धविषयवासनाय नमः
४५५. ॐ निर्गलित रिपुवर्गाय नमः
४५६. ॐ निर्द्वन्द्वभावसंस्थिताय नमः
४५७. ॐ निर्भयमार्गविहारिणे नमः
४५८. ॐ निर्भयात्मने नमः
४५९. ॐ निर्मलात्मने नमः
४६०. ॐ निर्मुक्तजन्मसंसारबन्धनाय नमः
४६१. ॐ निर्मुक्तदेहवासनाय नमः
४६२. ॐ निर्मुक्तसमस्तसङ्गाय नमः
४६३. ॐ निर्मूलितमूलाविद्याय नमः
४६४. ॐ निर्वर्तिताश्रमसर्वधर्माय नमः
४६५. ॐ निराडम्बरमूर्तये नमः
४६६. ॐ निर्वाणपदारूढाय नमः
४६७. ॐ निर्वाणप्रापकाय नमः
४६८. ॐ निर्जितारिषड्वर्गाय नमः
४६९. ॐ निर्जितेन्द्रियाय नमः
४७०. ॐ निर्विकार स्वभावाय नमः
४७१. ॐ निर्विषयस्थितिसंस्थिताय नमः
४७२. ॐ निर्लिप्तधवलाचाराय नमः
४७३. ॐ निरुपमसुखराशये नमः

४७४. ॐ निरुपमाचाराय नमः
४७५. ॐ निर्गुणरूपाय नमः
४७६. ॐ निरूढात्मभावाय नमः
४७७. ॐ निर्दुष्टगुणगरिष्ठाय नमः
४७८. ॐ निर्धूतभक्तमानसतमःपटलाय नमः
४७९. ॐ निर्धूतसर्वाघाय नमः
४८०. ॐ निवर्तितसर्वकामाय नमः
४८१. ॐ निवृत्तजीवभावाय नमः
४८२. ॐ निवृत्तदुःखसञ्चयाय नमः
४८३. ॐ निवृत्तभेदमोहाय नमः
४८४. ॐ निवृत्तवासनाजालाय नमः
४८५. ॐ निवृत्ताजेयतृष्णाय नमः
४८६. ॐ निवृत्तिपदसंस्थिताय
४८७. ॐ निवृत्तिपथोपदेशिकाय नमः
४८८. ॐ निवृत्यैकफलाखिलकर्मणे नमः
४८९. ॐ निश्श्रेयसकराय नमः
४९०. ॐ निष्कलङ्कचरिताय नमः
४९१. ॐ निष्कलुषान्तरङ्गाय नमः
४९२. ॐ निष्कामभावाय नमः
४९३. ॐ निष्परिग्रहाय नमः
४९४. ॐ निष्पादत्राणसञ्चारिणे नमः
४९५. ॐ निष्पादितगुरुनिर्देशाय नमः
४९६. ॐ निस्सङ्गवर्तनाय नमः
४९७. ॐ निस्पृहाचरितसर्वकर्मणे नमः
४९८. ॐ नैष्कर्म्यस्थितिसंस्थिताय नमः
४९९. ॐ नैष्ठिकब्रह्मचारिणे नमः
५००. ॐ पक्षपातविदूराय नमः

५०१. ॐ पण्डिताराध्याय नमः
५०२. ॐ पतितपावनाय नमः
५०३. ॐ पदसञ्चरितभूवलयाय नमः
५०४. ॐ पद्मपत्राम्भस्समानाय नमः
५०५. ॐ परमकरुणाशालिने नमः
५०६. ॐ परमपदविहारिणे नमः
५०७. ॐ परमपावनमूर्तये नमः
५०८. ॐ परममङ्गलधाम्ने नमः
५०९. ॐ परमानन्दरूपाय नमः
५१०. ॐ परमानन्दसंप्लुताय नमः
५११. ॐ परतत्त्ववेदिने नमः
५१२. ॐ परदुःखासहिष्णवे नमः
५१३. ॐ परापरविद्याभिज्ञात्रे नमः
५१४. ॐ परार्थैकजीविताय नमः
५१५. ॐ परिव्राट्प्रमुखाय नमः
५१६. ॐ परिव्राट्सार्वभौमाय नमः
५१७. ॐ परिशोधितत्त्वम्पदार्थाय नमः
५१८. ॐ पातकहरणाय नमः
५१९. ॐ पातकितारकाय नमः
५२०. ॐ पादस्पर्शहताखिलपापाय नमः
५२१. ॐ पापकाननपावकाय नमः
५२२. ॐ पापशोषणाय नमः
५२३. ॐ पायितज्ञानामृताय नमः
५२४. ॐ पारदर्शिने नमः
५२५. ॐ पितृपिण्डादनशीलित तपोव्रताय नमः
५२६. ॐ पीडितजनजीविकाप्रदात्रे नमः
५२७. ॐ पुण्यतीर्थोपान्तवासिने नमः

५२८. ॐ पुण्यश्लोकशिखामणये नमः
५२९. ॐ पुण्याश्रमीकृतपादस्पृष्टभूतलाय नमः
५३०. ॐ पुनरावृत्तिरहिताय नमः
५३१. ॐ पुनीतचरिताय नमः
५३२. ॐ पुरुपुण्यतीर्थसदनाय नमः
५३३. ॐ पूतचित्ताय नमः
५३४. ॐ पूततमतीर्थभूताय नमः
५३५. ॐ पूतभावनाय नमः
५३६. ॐ पूर्णकामाय नमः
५३७. ॐ पूर्णपुरुषाय नमः
५३८. ॐ पूर्णमनोरथाय नमः
५३९. ॐ प्रकटितगीतातत्त्वाय नमः
५४०. ॐ प्रकृतिगुणहीनाय नमः
५४१. ॐ प्रकृष्टप्रतिभान्विताय नमः
५४२. ॐ प्रक्षीणनिखिलबन्धनाय नमः
५४३. ॐ प्रगलिजीवभावाय नमः
५४४. ॐ प्रचारितानेकसुव्रताय नमः
५४५. ॐ प्रणतभक्ताभीष्टदाय नमः
५४६. ॐ प्रणतानेकसद्भक्ताय नमः
५४७. ॐ प्रणवध्यानतत्पराय नमः
५४८. ॐ प्रणवार्थज्ञाय नमः
५४९. ॐ प्रणवार्थबोधकाय नमः
५५०. ॐ प्रणवार्थविशेषाभिज्ञाय नमः
५५१. ॐ प्रणवोपदेशिकाय नमः
५५२. ॐ प्रत्यक्षजीवन्मुक्ताय नमः
५५३. ॐ प्रत्यगभिन्नाय नमः
५५४. ॐ प्रतिष्ठापितानेकदेवमन्दिराय नमः

५५५. ॐ प्रतिभातिशयशोभिताय नमः
५५६. ॐ प्रतिलब्धात्मभावाय नमः
५५७. ॐ प्रध्वस्तमायागुणाय नमः
५५८. ॐ प्रपन्नभयभञ्जनाय नमः
५५९. ॐ प्रवचनसुधासिक्तभक्तसन्तप्तचित्ताय नमः
५६०. ॐ प्रविततसुखपूर्णाय नमः
५६१. ॐ प्रश्रयशीलाय नमः
५६२. ॐ प्रशान्तधीशोभिताय नमः
५६३. ॐ प्रशान्तविग्रहाय नमः
५६४. ॐ प्रशान्तात्मने नमः
५६५. ॐ प्रहृष्टमानसाय नमः
५६६. ॐ प्राकृतजनमन्दाराय नमः
५६७. ॐ प्राण्युद्धारार्थधिक्कृतापुनर्भवाय नमः
५६८. ॐ प्रातःस्मरणीयाय नमः
५६९. ॐ प्राप्तब्रह्मात्मभावाय नमः
५७०. ॐ प्राप्तमनोरथाय नमः
५७१. ॐ प्राप्तसर्वात्मभावाय नमः
५७२. ॐ प्रियगुरुनिर्देशितनिजपदाय नमः
५७३. ॐ प्रेमपरिप्लुताय नमः
५७४. ॐ प्लावितोरुतापाय नमः
५७५. ॐ फलानुमेयारम्भकाय नमः
५७६. ॐ फलेप्सारहिताय नमः
५७७. ॐ फालाक्षस्वरूपाय नमः
५७८. ॐ फुल्लारविन्दायतलोचनाय नमः
५७९. ॐ बहुभक्तशोभिताय नमः
५८०. ॐ बहुभाषाभिज्ञाय नमः
५८१. ॐ बहुलाश्रमस्थापकाय नमः

५८२. ॐ बहूदनदात्रे नमः
५८३. ॐ बहूपमानकथनोदाराय नमः
५८४. ॐ ब्रह्मचर्यसंस्थिताय नमः
५८५. ॐ ब्रह्मतत्त्वोपदेशिकाय नमः
५८६. ॐ ब्रह्मतेजोपबृंहिताय नमः
५८७. ॐ ब्रह्मध्यानपराय नमः
५८८. ॐ ब्रह्मनिष्ठागरिष्ठाय नमः
५८९. ॐ ब्रह्मबोधनकलापारीणाय नमः
५९०. ॐ ब्रह्मभावविलीनाय नमः
५९१. ॐ ब्रह्मर्षिवरिष्ठाय नमः
५९२. ॐ ब्रह्मवर्चसाय नमः
५९३. ॐ ब्रह्मवादरताय नमः
५९४. ॐ ब्रह्मवादिप्रमुखाय नमः
५९५. ॐ ब्रह्मवित्तमाय नमः
५९६. ॐ ब्रह्मविद्वरिष्ठाय नमः
५९७. ॐ ब्रह्मविद्याप्रचारकाय नमः
५९८. ॐ ब्रह्मस्वरूपाय नमः
५९९. ॐ ब्रह्मानन्दनिमग्नाय नमः
६००. ॐ ब्रह्मोपदेष्ट्रे नमः
६०१. ॐ बाधितभवभावाय नमः
६०२. ॐ बाधितसंसाराय नमः
६०३. ॐ बाल्यपरित्यक्तगेहाय नमः
६०४. ॐ बाह्याभ्यन्तरशुचिप्रियाय नमः
६०५. ॐ ब्राह्मीस्थितिसंस्थिताय नमः
६०६. ॐ बुधजनतोषकाय नमः
६०७. ॐ बुधनुतचरित्राय नमः
६०८. ॐ बुधमान्यसदाचाराय नमः

६०९. ॐ बुद्धिमत्सत्तमाय नमः
६१०. ॐ बोधकाग्रेसराय नमः
६११. ॐ बोधसुधाकराय नमः
६१२. ॐ बोधानन्दैकमूर्तये नमः
६१३. ॐ बोधामृतवर्षकाय नमः
६१४. ॐ बोधितगुरुदेवतत्त्वाय नमः
६१५. ॐ बोधितमहावाक्यार्थाय नमः
६१६. ॐ बोधोपरतिवैराग्यविराजिने नमः
६१७. ॐ भक्तगणसन्ततसंस्मृताय नमः
६१८. ॐ भक्तजनमनःपद्मषट्पदाय नमः
६१९. ॐ भक्तजनमनोनेत्राभिरामाय नमः
६२०. ॐ भक्तजनमनोरञ्जकाय नमः
६२१. ॐ भक्तजनमनोहराय नमः
६२२. ॐ भक्तजनहृच्चोराय नमः
६२३. ॐ भक्तजनानन्दकराय नमः
६२४. ॐ भक्तदुर्गतिहारिणे नमः
६२५. ॐ भक्तदुर्भवपयोनिधितारणाय नमः
६२६. ॐ भक्तबृन्दवन्दिताय नमः
६२७. ॐ भक्तमहोत्साहप्रदाय नमः
६२८. ॐ भक्तलोकशुभदायकाय नमः
६२९. ॐ भक्तवत्सलाय नमः
६३०. ॐ भक्तव्यूहमुदावहाय नमः
६३१. ॐ भक्तहृत्पद्मवासिने नमः
६३२. ॐ भक्तहृत्पीठाधिष्ठितचरणाय नमः
६३३. ॐ भक्तहृद्भद्रपीठाधिष्ठिताय नमः
६३४. ॐ भक्तहृदीप्सितदायिने नमः
६३५. ॐ भक्ताघौघनिकृन्तनाय नमः

६३६. ॐ भक्तानुकम्पाधृतस्थूलदेहाय नमः
६३७. ॐ भक्तानुग्रहसुमचित्ताय नमः
६३८. ॐ भक्ताराधितमृदुचरणाय नमः
६३९. ॐ भक्तार्तिविध्वंसकाय नमः
६४०. ॐ भक्तिप्रचारकाय नमः
६४१. ॐ भक्तिबोधनरामानुजाय नमः
६४२. ॐ भक्तिमुक्तिप्रदाय नमः
६४३. ॐ भक्तोद्धारकाय नमः
६४४. ॐ भक्तोपगीतचरिताय नमः
६४५. ॐ भक्तौघपूजितपादपद्माय नमः
६४६. ॐ भञ्जितबन्धनाय नमः
६४७. ॐ भद्रकटाक्षवीक्षणाय नमः
६४८. ॐ भद्रभावनाय नमः
६४९. ॐ भवतप्तभक्तचित्तचकोरचन्द्रमसे नमः
६५०. ॐ भवबाधापहारकाय नमः
६५१. ॐ भवभयरहिताय नमः
६५२. ॐ भवभयहारिणे नमः
६५३. ॐ भवभयार्तिहराय नमः
६५४. ॐ भवभूरितिमिरदिनेशाय नमः
६५५. ॐ भवमहार्णवशोषाय नमः
६५६. ॐ भवरोगभेषजाय नमः
६५७. ॐ भव्यमूर्तये नमः
६५८. ॐ भर्जितबीजसमानाय नमः
६५९. ॐ भवाटवीभ्रमद्दर्शितसत्पथाय नमः
६६०. ॐ भवार्णवतरणाय नमः
६६१. ॐ ‘भारति’सञ्चालकाय नमः
६६२. ॐ भासुरवदनाय नमः

६६३. ॐ भिक्षुसमावृताय नमः
६६४. ॐ भीकरतरसंसारतारणाय नमः
६६५. ॐ भूरिगुणसान्द्राय नमः
६६६. ॐ भूरिभूतिभासिताय नमः
६६७. ॐ भोगवर्जिताय नमः
६६८. ॐ मङ्गलपदात्रे नमः
६६९. ॐ मतभेदविवर्जिताय नमः
६७०. ॐ मथिताखिलशास्त्राय नमः
६७१. ॐ मधुरसम्भाषकाय नमः
६७२. ॐ मनश्चिन्तितकथनशीलाय नमः
६७३. ॐ मन्त्रार्थतत्त्वज्ञाय नमः
६७४. ॐ ममतारहिताय नमः
६७५. ॐ मलयालमौनिचन्द्राय नमः
६७६. ॐ महनीयगुणगरिष्ठाय नमः
६७७. ॐ महर्षिपुङ्गवाय नमः
६७८. ॐ महानयविशारदाय नमः
६७९. ॐ महावाक्यर्थस्वरूपाय नमः
६८०. ॐ महावैभवशालिने नमः
६८१. ॐ मातृप्रेमास्पदाय नमः
६८२. ॐ मातृप्रेमपरवशाय नमः
६८३. ॐ मातृस्मरणाह्लादभाष्पपर्याकुलेक्षणाय नमः
६८४. ॐ मातृस्मृतिसंरुद्धकण्ठाश्रुलोचनाय नमः
६८५. ॐ मान्ध्यध्वान्तध्वंसकाय नमः
६८६. ॐ मानावमानसमानाय नमः
६८७. ॐ मायामोहनिरासकाय नमः
६८८. ॐ मायारहिताय नमः
६८९. ॐ मायालतालवित्राय नमः

६९०. ॐ मुक्तकामाशयाय नमः
६९१. ॐ मुक्तकिल्बिशाय नमः
६९२. ॐ मुक्तसंशयाय नमः
६९३. ॐ मुक्तिप्रदात्रे नमः
६९४. ॐ मुक्तिसाम्राज्याभिषिक्ताय नमः
६९५. ॐ मुनिवर्याय नमः
६९६. ॐ मुमुक्षुशरणाय नमः
६९७. ॐ मुमुक्षुहितैषिणे नमः
६९८. ॐ मृदुभाषितविजितनिखिलपरिपन्थिने नमः
६९९. ॐ मृदुमितवाक्सम्मिताय नमः
७००. ॐ मृदुलभाषामृतवर्षिणे नमः
७०१. ॐ मोहनिर्मुक्ताय नमः
७०२. ॐ मोहविध्वंसकाय नमः
७०३. ॐ मोक्षमार्गप्रदर्शकाय नमः
७०४. ॐ मोक्षोपायनिर्देशिकाय नमः
७०५. ॐ मौनशीलाय नमः
७०६. ॐ यतवाङ्मानसाय नमः
७०७. ॐ यत्यग्रगण्याय नमः
७०८ ॐ यतिकुलकैरवचन्द्राय नमः
७०९. ॐ यतिकुलसद्धर्मचारिणे नमः
७१०. ॐ यतिकुलाम्बोधिचन्द्रमसे नमः
७११. ॐ यतिकुलाराध्याय नमः
७१२. ॐ यतिमण्डलमण्डिताय नमः
७१३. ॐ यतिमण्डलमध्यस्थाय नमः
७१४. ॐ यतीन्द्रतिलकाय नमः
७१५. ॐ यथाधिकारिबोधविचक्षणाय नमः
७१६. ॐ यथाप्राप्तमुदितमानसाय नमः

७१७. ॐ यमादिपालकाय नमः
७१८. ॐ यशस्कामविमुखाय नमः
७१९. ॐ युगानुरूपवर्तनाय नमः
७२०. ॐ युगावताराय नमः
७२१. ॐ योगिजनवन्द्याय नमः
७२२. ॐ रचितानेकग्रन्थाय नमः
७२३. ॐ रमणीयगुणान्विताय नमः
७२४. ॐ रमणीयाचरणाय नमः
७२५. ॐ रागद्वेषमलापहाय नमः
७२६. ॐ रागविदूराय नमः
७२७. ॐ रागादिदोषरहितस्वान्ताय नमः
७२८. ॐ रिपुषट्कजेत्रे नमः
७२९. ॐ रुचिरस्मितवदनाय नमः
७३०. ॐ रुरुचर्मासनासीनाय नमः
७३१. ॐ लक्षितलक्ष्याय नमः
७३२. ॐ लीलासमाचरितसर्वकर्मणे नमः
७३३. ॐ लोकतत्त्वविचक्षणाय नमः
७३४. ॐ लोकनिस्पृहाय नमः
७३५. ॐ लोकपावनतत्पराय नमः
७३६. ॐ लोकबान्धवाय नमः
७३७. ॐ लोकमङ्गलदायकाय नमः
७३८. ॐ लोकमतानुचारिणे नमः
७३९. ॐ लोकमलापहाय नमः
७४०. ॐ लोकसङ्ग्रहैकलक्ष्याय नमः
७४१. ॐ लोकसंघटनदक्षाय नमः
७४२. ॐ लोकाचारविचक्षणाय नमः
७४३. ॐ लोकितात्मस्वरूपाय नमः

७४४. ॐ लोकोत्तरकर्मचारणे नमः
७४५. ॐ लोकोत्तरचरिताय नमः
७४६. ॐ लोकोद्धारकाय नमः
७४७. ॐ व्यसनदुर्भरसागरतरणाय नमः
७४८. ॐ वाग्यतवर्याय नमः
७४९. ॐ वाग्वेदान्तिदुर्दान्तदर्पदलनाय नमः
७५०. ॐ वाचंयमसार्वभौमाय नमः
७५१. ॐ वातवर्षातपसहाय नमः
७५२. ॐ वादतत्त्वज्ञाय नमः
७५३. ॐ वादविदूराय नमः
७५४. ॐ वारितदुरितव्राताय नमः
७५५. ॐ वारितसर्वस्पृहाय नमः
७५६. ॐ वासनात्रयरहिताय नमः
७५७. ॐ व्यासाश्रमस्थापकाय नमः
७५८. ॐ व्यासाश्रमसदावासाय नमः
७५९. ॐ व्यासाश्रमाधिदेवाय नमः
७६०. ॐ व्यासावताराय नमः
७६१. ॐ विगतक्लमाय नमः
७६२. ॐ विगतलोकविभ्रमाय नमः
७६३. ॐ विगतवयोविकाराय नमः
७६४. ॐ विच्छिन्नग्रन्थिनिचयाय नमः
७६५. ॐ विच्छिन्नात्मबन्धनाय नमः
७६६. ॐ विज्ञानदावाग्निभस्मितकर्मणे नमः
७६७. ॐ विज्ञानदृग्वीर्यसुरन्धिताशयाय नमः
७६८. ॐ विज्ञाननिधये नमः
७६९. ॐ विज्ञानप्रदाय नमः
७७०. ॐ विजितेन्द्रियाय नमः

७७१. ॐ विदग्धवासनाजालाय नमः
७७२. ॐ विदलितभवपाशाय नमः
७७३. ॐ विद्यातपोयोगयुक्ताय नमः
७७४. ॐ विद्याप्रदात्रे नमः
७७५. ॐ विद्रावितमहान्धकाराय नमः
७७६. ॐ विदितवेदशिखार्थाय नमः
७७७. ॐ विदितात्मतत्त्वाय नमः
७७८. ॐ विदेहभावभासिताय नमः
७७९. ॐ विध्वस्तदोषनिवहाय नमः
७८०. ॐ विध्वस्ताशेषविधिनिषेधाय नमः
७८१. ॐ विधूतकिल्बिशाय नमः
७८२. ॐ विधूतद्वन्द्वधर्माय नमः
७८३. ॐ विधूतभववेदनाय नमः
७८४. ॐ विधूतशोकाय नमः
७८५. ॐ विधूताखिलकर्मबन्धनाय नमः
७८६. ॐ विधूताशेषकल्मषाय नमः
७८७. ॐ विनष्टत्रिपुटिभावाय नमः
७८८. ॐ विनष्टभेददर्शनाय नमः
७८९. ॐ विनीतभावभासिताय नमः
७९०. ॐ विमलतेजसे नम:
७९१. ॐ विमलज्ञानरमणीयाय नमः
७९२. ॐ विमलसौजन्यधन्याय नमः
७९३. ॐ विमलायतेक्षणाय नमः
७९४. ॐ विमलाशयाय नमः
७९५. ॐ विमुक्तकर्मार्गलाय नमः
७९६. ॐ विरक्तियुतमनीषिणे नमः
७९७. ॐ विविक्तदेशसंस्थिताय नमः

७९८. ॐ विविधाश्रमसञ्चालकाय नमः
७९९. ॐ विवेकहेतिच्छिन्नमायामयाहङ्काराय नमः
८००. ॐ विश्वकल्याणकाङ्क्षिणे नमः
८०१. ॐ विश्वबान्धवाय नमः
८०२. ॐ विश्वविदूराय नमः
८०३. ॐ विशालहृदयाय नमः
८०४. ॐ विश्रान्तचित्ताय नमः
८०५. ॐ विशुद्धज्ञानमूर्तये नमः
८०६. ॐ विशुद्धभावभासिताय नमः
८०७. ॐ विशुद्धान्तरङ्गाय नमः
८०८. ॐ विषयविरक्तचित्ताय नमः
८०९. ॐ विषयविषपानसमाकुलहृदभिवर्षितचिदमृताय नमः
८१०. ॐ विषयाविदूषितहृदयाय नमः
८११. ॐ विषयाविषक्तदृष्टये नमः
८१२. ॐ वीतमत्सराय नमः
८१३. ॐ वीतरागभयक्रोधाय नमः
८१४. ॐ वीतसमस्ताघव्राताय नमः
८१५. ॐ वीतानुरागाय नमः
८१६. ॐ वृजिनबीजावभर्जनाय नमः
८१७. ॐ वेदान्तडिण्डिमोद्घोषकाय नमः
८१८. ॐ वैराग्यगुणविजृम्भिताय नमः
८१९. ॐ शङ्करस्वरूपाय नमः
८२०. ॐ शमदमशालिने नमः
८२१. ॐ शमादिनिलयाय नमः
८२२. ॐ शरण्याभयधात्रे नमः
८२३. ॐ शश्वत्सिद्धासनस्थाय नमः
८२४. ॐ शान्तविग्रहाय नमः

८२५. ॐ शान्तिप्रियाय नमः
८२६. ॐ शान्तिपूर्णाय नमः
८२७. ॐ शान्तिरसपानपरायणाय नमः
८२८. ॐ शास्त्ररहःप्रकाशकाय नमः
८२९. ॐ शिक्षितगीतापठनाय नमः
८३०. ॐ शिक्षितशिष्टाचाराय नमः
८३१. ॐ 'शिवलिङ्गगुरु'प्रीतिवर्धनाय नमः
८३२. ॐ शिवप्रदात्रे नमः
८३३. ॐ शीलितप्रदोषव्रताय नमः
८३४. ॐ शुचिस्मिताय नमः
८३५. ॐ शुद्धज्ञेयैकरूपाय नमः
८३६. ॐ शुद्धसत्त्वगुणशोभिताय नमः
८३७. ॐ शुभकरचरिताय नमः
८३८. ॐ शुभतरभावोपेताय नमः
८३९. ॐ शुभमतिवर्धकाय नमः
८४०. ॐ शुष्कवादतमोभास्कराय नमः
८४१. ॐ शुष्कवेदान्तिदन्तीशकेसरिणे नमः
८४२. ॐ शोकजरामृत्युसागरशोषणाय नमः
८४३. ॐ शोकद्वेषविमुक्ताय नमः
८४४. ॐ शोकमोहनिर्मुक्ताय नमः
८४५. ॐ शोधितपरतत्त्वाय नमः
८४६. ॐ श्रद्धागरिष्टचित्ताय नमः
८४७. ॐ श्रद्धोपार्जितस्वात्मबलसम्पन्नाय नमः
८४८. ॐ श्रद्धोपासितगुरुदेवाय नमः
८४९. ॐ श्रवणीयगुणगणाय नमः
८५०. ॐ श्रीशिवलिङ्गगुरुसच्छिष्याय नमः
८५१. ॐ श्रीवेङ्कटकृपापात्राय नमः

८५२. ॐ श्रुतिपरम्परापालकाय नमः
८५३. ॐ श्रुतिमर्मोद्घाटकाय नमः
८५४. ॐ श्रेयोविधात्रे नमः
८५५. ॐ श्लाघनीयगुणौघाय नमः
८५६. ॐ षड्रिपुविजेत्रे नमः
८५७. ॐ षडूर्मिरहिताय नमः
८५८. ॐ सङ्कीर्णमतातीताय नमः
८५९. ॐ सङ्गवर्जितचित्ताय नमः
८६०. ॐ सङ्घसंस्करणनिपुणाय नमः
८६१. ॐ सङ्घसंस्कारदयानन्दाय नमः
८६२. ॐ सञ्चिततपोधनाय नमः
८६३. ॐ सञ्चितपुण्यफलाय नमः
८६४. ॐ सञ्छिन्नदुर्जरगेहश्रृङ्खलाय नमः
८६५. ॐ सञ्छिन्नदेहमोहरशनाय नमः
८६६. ॐ सञ्छिन्नमोहश्रृङ्खलाय नमः
८६७. ॐ सन्ततपरमानन्दभरिताय नमः
८६८. ॐ सन्तप्तोद्धारनिविष्टचित्ताय नमः
८६९. ॐ सन्त्यक्तगेहाय नमः
८७०. ॐ सन्यस्तसमस्तवासनाय नमः
८७१. ॐ सन्यासिकुलभूषणाय नमः
८७२. ॐ सम्पुटीकृतकरकमलाय नमः
८७३. ॐ सम्मानितनिखिलधर्माय नमः
८७४. ॐ सम्मानितशिष्टजनाय नमः
८७५. ॐ संयममुद्राभिरामाय नमः
८७६. ॐ संशयग्रन्थिभेदकाय नमः
८७७. ॐ संसारकूपपतितोद्धारकाय नमः
८७८. ॐ संसारभयविदूराय नमः

८७९. ॐ संसारलतालवित्राय नमः
८८०. ॐ संसारालिप्तचित्ताय नमः
८८१. ॐ संस्कृतभाषापोषकाय नमः
८८२. ॐ संस्तुतचरिताय नमः
८८३. ॐ संसृतिबन्धविमोचकाय नमः
८८४. ॐ संसृतिरहिताय नमः
८८५. ॐ संसृतिसंहरणाय नमः
८८६. ॐ संहृतसर्वकरणाय नमः
८८७. ॐ संहृतेन्द्रियकूर्मवृत्तये नमः
८८८. ॐ सच्चरितवरिष्ठाय नमः
८८९. ॐ सच्चिदानन्दरूपाय नमः
८९०. ॐ सच्छिक्षापादकाय नमः
८९१. ॐ सज्जनार्तिसंहरणाय नमः
८९२. ॐ सततपवित्राय नमः
८९३. ॐ सततसत्कर्मनिरताय नमः
८९४. ॐ सततसद्भक्तसेविताय नमः
८९५. ॐ सत्यप्रियहितवादिने नमः
८९६. ॐ 'सत्रयाग'प्रवर्तकाय नमः
८९७. ॐ सत्त्वगुणगरिष्ठाय नमः
८९८. ॐ सत्सङ्गनिरताय नमः
८९९. ॐ सतीर्थ्याधिकगुरुप्रियाय नमः
९००. ॐ सदमलचित्ताय नमः
९०१. ॐ सदमलभक्तावनाय नमः
९०२. ॐ सदयस्मितवीक्षणाय नमः
९०३. ॐ सदृष्टान्तप्रबोधकाय नमः
९०४. ॐ सद्वृत्तसम्प्रीताय नमः
९०५. ॐ सद्वृत्ताकृष्टानेकसाधकवराय नमः

९०६. ॐ सद्गतिप्रापकाय नमः
९०७. ॐ सद्भक्तचेतोहराय नमः
९०८. ॐ सद्भक्तसमाश्रिताय नमः
९०९. ॐ सद्भक्तहृन्मन्दिराङ्गणपारिजाताय नमः
९१०. ॐ सदाचाराकृष्टसर्वान्ध्राय नमः
९११. ॐ सदाचारनन्दिताय नमः
९१२. ॐ सद्भावभासिताय नमः
९१३. ॐ सद्धर्मपरायणाय नमः
९१४. ॐ सद्धर्मविवेकशीलाय नमः
९१५. ॐ सनातनधर्मोद्धारकाय नमः
९१६. ॐ सन्नुतसुगुणस्तोमाय नमः
९१७. ॐ समचित्ताय नमः
९१८. ॐ समस्तदुरितनिस्तारकाय नमः
९१९. ॐ समदर्शिने नमः
९२०. ॐ समधिकानुष्ठिततप्योध्यनाय नमः
९२१. ॐ समभावभासिताय नमः
९२२. ॐ समरसभावसम्पन्नाय नमः
९२३. ॐ समवाक्कायमानसाय नमः
९२४. ॐ समशीतोष्णभावाय नमः
९२५. ॐ सम्यग्ज्ञानपारिणाय नमः
९२६. ॐ समाद्रुतसर्वमताय नमः
९२७. ॐ समाहितचित्ताय नमः
९२८. ॐ समाहितात्मने नमः
९२९. ॐ समुत्तीर्णभवार्णवाय नमः
९३०. ॐ सरसोदारसुधारसोपमवचश्चातुर्यसौभाग्याय नमः
९३१. ॐ सर्वतीर्थास्पदपादरेणवे नमः
९३२. ॐ सर्वद्वन्द्वसहाय नमः

९३३. ॐ सर्वधर्मविशारदाय नमः
९३४. ॐ सर्वधर्मैक्यबोधकाय नमः
९३५. ॐ सर्वपर्वानुचारिणे नमः
९३६. ॐ सर्वपापहराय नमः
९३७. ॐ सर्वपुण्यफलात्मकाय नमः
९३८. ॐ सर्वभूतदयापरस्वान्ताय नमः
९३९. ॐ सर्वभूतमुदावहाय नमः
९४०. ॐ सर्वभूतसुहृत्तमाय नमः
९४१. ॐ सर्वमतसमन्वयस्थापकाय नमः
९४२. ॐ सर्वमतसन्मानिताय नमः
९४३. ॐ सर्वमङ्गलधान्मे नमः
९४४. ॐ सर्वलोकशुभावहाय नमः
९४५. ॐ सर्वसङ्गपरित्यागिने नमः
९४६. ॐ सर्वसमर्थाय नमः
९४७. ॐ सर्वोपकारकाय नमः
९४८. ॐ सर्वोपाधिवर्जिताय नमः
९४९. ॐ स्मरणीयचरित्राय नमः
९५०. ॐ स्वगुरुहृदयतोषिणे नमः
९५१. ॐ स्वच्छशीलाय नमः
९५२. ॐ स्वस्तिप्रदाय नमः
९५३. ॐ साक्षात्कृतात्मस्वरूपाय नमः
९५४. ॐ साक्षिभूतवर्तनाय नमः
९५५. ॐ साधनपथविदितबहुमर्माय नमः
९५६. ॐ साधनाभिनिविष्टचित्ताय नमः
९५७. ॐ साधुचरिताय नमः
९५८. ॐ साधुजनजेगीयमानाय नमः
९५९. ॐ साधुजनपोषपरितोषिताय नमः

९६०. ॐ साधुदर्शनाय नमः
८६१. ॐ सङ्घसंस्कारदयानन्दाय नमः
८६२. ॐ सञ्चिततपोधनाय नमः
८६३. ॐ सञ्चितपुण्यफलाय नमः
८६४. ॐ सञ्छिन्नदुर्जरगेहश्रृङ्खलाय नमः
८६५. ॐ सञ्छिन्नदेहमोहरशनाय नमः
८६६. ॐ सञ्छिन्नमोहश्रृङ्खलाय नमः
८६७. ॐ सन्ततपरमानन्दभरिताय नमः
८६८. ॐ सन्तप्तोद्धारनिविष्टचित्ताय नमः
८६९. ॐ सन्त्यक्तगेहाय नमः
८७०. ॐ सन्यस्तसमस्तवासनाय नमः
८७१. ॐ सन्यासिकुलभूषणाय नमः
८७२. ॐ सम्पुटीकृतकरकमलाय नमः
८७३. ॐ सम्मानितनिखिलधर्माय नमः
८७४. ॐ सम्मानितशिष्टजनाय नमः
८७५. ॐ संयममुद्राभिरामाय नम:
८७६. ॐ संशयग्रन्थिभेदकाय नमः
८७७. ॐ संसारकूपपतितोद्धारकाय नमः
८७८. ॐ संसारभयविदूराय नमः
८७९. ॐ संसारलतालवित्राय नमः
८८०. ॐ संसारालिप्तचित्ताय नमः
८८१. ॐ संस्कृतभाषापोषकाय नमः
८८२. ॐ संस्तुतचरिताय नमः
८८३. ॐ संसृतिबन्धविमोचकाय नमः
८८४. ॐ संसृतिरहिताय नमः
८८५. ॐ संसृतिसंहरणाय नमः
८८६. ॐ संहृतसर्वकरणाय नमः

८८७. ॐ संहृतेन्द्रियकूर्मवृत्तये नमः
८८८. ॐ सच्चरितवरिष्ठाय नमः
८८९. ॐ सच्चिदानन्दरूपाय नमः
८९०. ॐ सच्छिक्षापादकाय नमः
८९१. ॐ सज्जनार्तिसंहरणाय नमः
८९२. ॐ सततपवित्राय नमः
८९३. ॐ सततसत्कर्मनिरताय नमः
८९४. ॐ सततसद्भक्तसेविताय नमः
८९५. ॐ सत्यप्रियहितवादिने नमः
८९६. ॐ ‘सत्रयाग’प्रवर्तकाय नमः
८९७. ॐ सत्त्वगुणगरिष्ठाय नमः
८९८. ॐ सत्सङ्गनिरताय नमः
८९९. ॐ सतीर्थ्याधिकगुरुप्रियाय नमः
९००. ॐ सदमलचित्ताय नमः
९०१. ॐ सदमलभक्तावनाय नमः
९०२. ॐ सदयस्मितवीक्षणाय नमः
९०३. ॐ सदृष्टान्तप्रबोधकाय नमः
९०४. ॐ सद्वृत्तसम्प्रीताय नमः
९०५. ॐ सद्वृत्ताकृष्टानेकसाधकवराय नमः
९०६. ॐ सद्गतिप्रापकाय नमः
९०७. ॐ सद्भक्तचेतोहराय नमः
९०८. ॐ सद्भक्तसमाश्रिताय नमः
९०९. ॐ सद्भक्तहृन्मन्दिराङ्गणपारिजाताय नमः
९१०. ॐ सदाचाराकृष्टसर्वान्ध्राय नमः
९११. ॐ सदाचारनन्दिताय नमः
९१२. ॐ सद्भावभासिताय नमः
९१३. ॐ सद्धर्मपरायणाय नमः

९१४. ॐ सद्धर्मविवेकशीलाय नमः
९१५. ॐ सनातनधर्मोद्धारकाय नमः
९१६. ॐ सन्नुतसुगुणस्तोमाय नमः
९१७. ॐ समचित्ताय नमः
९१८. ॐ समस्तदुरितनिस्तारकाय नमः
९१९. ॐ समदर्शिने नमः
९२०. ॐ समधिकानुष्ठिततप्योध्ययनाय नमः
९२१. ॐ समभावभासिताय नमः
९२२. ॐ समरसभावसम्पन्नाय नमः
९२३. ॐ समवाक्कायमानसाय नमः
९२४. ॐ समशीतोष्णभावाय नमः
९२५. ॐ सम्यग्ज्ञानपारिणाय नमः
९२६. ॐ समाद्रुतसर्वमताय नमः
९२७. ॐ समाहितचित्ताय नमः
९२८. ॐ समाहितात्मने नमः
९२९. ॐ समुत्तीर्णभवार्णवाय नमः
९३०. ॐ सरसोदारसुधारसोपमवचश्चातुर्यसौभाग्याय नमः
९३१. ॐ सर्वतीर्थास्पदपादरेणवे नमः
९३२. ॐ सर्वद्वन्द्वसहाय नमः
९३३. ॐ सर्वधर्मविशारदाय नमः
९३४. ॐ सर्वधर्मैक्यबोधकाय नमः
९३५. ॐ सर्वपर्वानुचारिणे नमः
९३६. ॐ सर्वपापहराय नमः
९३७. ॐ सर्वपुण्यफलात्मकाय नमः
९३८. ॐ सर्वभूतदयापरस्वन्ताय नमः
९३९. ॐ सर्वभूतमुदावहाय नमः
९४०. ॐ सर्वभूतसुहृत्तमाय नमः

९४१. ॐ सर्वमतसमन्वयस्थापकाय नमः
९४२. ॐ सर्वमतसन्मानिताय नमः
९४३. ॐ सर्वमङ्गलधाम्ने नमः
९४४. ॐ सर्वलोकशुभावहाय नमः
९४५. ॐ सर्वसङ्गपरित्यागिने नमः
९४६. ॐ सर्वसमर्थाय नमः
९४७. ॐ सर्वोपकारकाय नमः
९४८. ॐ सर्वोपाधिवर्जिताय नमः
९४९. ॐ स्मरणीयचरित्राय नमः
९५०. ॐ स्वगुरुहृदयतोषिणे नमः
९५१. ॐ स्वच्छशीलाय नमः
९५२. ॐ स्वस्तिप्रदाय नमः
९५३. ॐ साक्षात्कृतात्मस्वरूपाय नमः
९५४. ॐ साक्षिभूतवर्तनाय नमः
९५५. ॐ साधनपथविदितबहुमर्माय नमः
९५६. ॐ साधनाभिनिविष्टचित्ताय नमः
९५७. ॐ साधुचरिताय नमः
९५८. ॐ साधुजनजेगीयमानाय नमः
९५९. ॐ साधुजनपोषपरितोषिताय नमः
९६०. ॐ साधुदर्शनाय नमः
९६१. ॐ साधुभक्तजनवत्सलाय नमः
९६२. ॐ साधुभावाय नमः
९६३. ॐ साधुलोकभयापहाय नमः
९६४. ॐ साधुलोकभयाप्रदाय नमः
९६५. ॐ साधुसेवितपदाय नमः
९६६. ॐ सारासरविवेकाय नमः
९६७. ॐ स्मारितसूतमौनिने नमः

९६८. ॐ स्वाभीष्टसिद्धिमात्रासन्तृप्ताय नमः
९६९. ॐ सिद्धपुरुषाय नमः
९७०. ॐ सिद्धसङ्कल्पाय नमः
९७१. ॐ सिद्धासनासीनाय नमः
९७२. ॐ स्मितभासितवदनाय नमः
९७३. ॐ स्मितसुन्दरास्याय नमः
९७४. ॐ स्त्रीजात्युद्धारकाय नमः
९७५. ॐ स्त्रीस्थविरगीतापठनोद्बोधकाय नमः
९७६. ॐ स्त्रीविद्याभिवर्धकाय नमः
९७७. ॐ सुगुणालवालाय नमः
९७८. ॐ सुजनगेयपवित्रचरित्राय नमः
९७९. ॐ सुज्ञानदायकाय नमः
९८०. ॐ सुदृढात्मभावाय नमः
९८१. ॐ सुधामधुरबोधसमन्विताय नमः
९८२. ॐ सुधारुचिभाषिणे नमः
९८३. ॐ सुनियन्त्रितमानसाय नमः
९८४. ॐ सुबोधहेतिविच्छिन्नबन्धनाय नमः
९८५. ॐ सुभगचरित्राय नमः
९८६. ॐ सुमहितभागधेयाय नमः
९८७. ॐ सुव्रताचारभासुराय नमः
९८८. ॐ स्पृहणीयगुणालयाय नमः
९८९. ॐ सूनृतव्रतभूषिताय नमः
९९०. ॐ सूनृतव्रतप्राप्तवचस्सिद्धिभासिताय नमः
९९१. ॐ सेवितनारायणगुरुचरणाय नमः
९९२. ॐ स्त्रैणपारिव्राज्यानुमोदकाय नमः
९९३. ॐ स्त्रैणाभ्युदयकृतोद्यमाय नमः
९९४. ॐ सोऽहंभावभाविताय नमः

९९५. ॐ सौम्यस्वरूपाय नमः
९९६. ॐ सौशील्यगुणाभितृप्ताय नमः
९९७. ॐ हतरजस्तमोभावाय नमः
९९८. ॐ हरिजनार्चितनिजपदाय नमः
९९९. ॐ हितमितभोजिने नमः
१०००. ॐ हितप्रियवादिने नमः
१००१. ॐ हीनदीनजनानुग्रहपराय नमः
१००२. ॐ हृत्तापहारकाय नमः
१००३. ॐ हृद्यात्मवेदिने नमः
१००४. ॐ हेयगुणरहिताय नमः
१००५. ॐ क्षान्तानन्तदोषाय नमः
१००६. ॐ क्षान्तिस्वरूपाय नमः
१००७. ॐ क्षालिताखिलकल्मषाय नमः
१००८. ॐ क्षीणदुर्वासनाय नमः

इति श्रीमदसङ्गानन्द सद्गुरु सहस्रनामावलि समाप्ता

श्लो॥ॐ मङ्गलं गुरुदेवाय, भवदुःखापहारिणे।
असङ्गानन्दरूपाय, मुक्तिदात्रेऽस्तु मङ्गलम् ॥

*********************************************

**श्री सद्गुरु महर्षि मलयाल यतीन्द्र अष्टोत्तर शतनाम संकीर्तनम्**

सद्गुरुदेवा नमो नमो, सच्चिदानन्दा नमो नमो

| | | | |
|---|---|---|---|
| १. | ” | अखण्डतेजा | ” |
| २. | ” | अगणितगुणगण | ” |
| ३. | ” | अचिन्त्यवैभव | ” |
| ४. | ” | अजातशत्रू | ” |
| ५. | ” | अतन्द्रितेन्द्रिय | ” |
| ६. | ” | अद्वयरूपा | ” |

| | | | |
|---|---|---|---|
| ७. | ” | अद्भुतचरिता | ” |
| ८. | ” | अनाथपोषक | ” |
| ९. | ” | अपहतपाप्मा | ” |
| १०. | ” | अभेददर्शी | ” |
| ११. | ” | अमृतभाषणा | ” |
| १२. | ” | अमोघवचना | ” |
| १३. | ” | आत्मारामा | ” |
| १४. | ” | आदर्शचरिता | ” |
| १५. | ” | आन्ध्रोद्धारक | ” |
| १६. | ” | आनन्दनिलया | ” |
| १७. | ” | आराध्यचरणा | ” |
| १८. | ” | आर्षाचारा | ” |
| १९. | ” | आश्रितचरणा | ” |
| २०. | ” | आश्रितवत्सला | ” |
| २१. | ” | इद्धचरित्रा | ” |
| २२. | ” | इन्द्रियदमना | ” |
| २३. | ” | ईढ्यगुणाढ्या | ” |
| २४. | ” | ईश्वररूपा | ” |
| २५. | ” | उज्वलचरिता | ” |
| २६. | ” | उत्तमश्लोका | ” |
| २७. | ” | उपरतेन्द्रिया | ” |
| २८. | ” | ऊर्ध्व रेता | ” |
| २९. | ” | ऋजुप्रवर्तना | ” |
| ३०. | ” | ऋतसम्भाषी | ” |
| ३१. | ” | एकाग्रमनसा | ” |
| ३२. | ” | एकान्तवासी | ” |
| ३३. | ” | ओङ्काररूपा | ” |

| | | | |
|---|---|---|---|
| ३४. | ” | ओजोमुर्ती | ” |
| ३५. | ” | कलिकल्मषहर | ” |
| ३६. | ” | कामनारहिता | ” |
| ३७. | ” | कारणजन्मा | ” |
| ३८. | ” | कारुण्यसागरा | ” |
| ३९. | ” | कालाभिज्ञा | ” |
| ४०. | ” | कृपाविशाला | ” |
| ४१. | ” | खण्डिताघौघा | ” |
| ४२. | ” | ख्यातसुकीर्ती | ” |
| ४३. | ” | गुणरत्ननिधी | ” |
| ४४. | ” | गुरुभक्तियुता | ” |
| ४५. | ” | घनकृपाकरा | ” |
| ४६. | ” | घोरतपश्चर | ” |
| ४७. | ” | चित्पदाधिष्टित | ” |
| ४८. | ” | चिन्मयरूपा | ” |
| ४९. | ” | छिन्नबन्धना | ” |
| ५०. | ” | छिन्नसंशया | ” |
| ५१. | ” | जगद्गुरुदेवा | ” |
| ५२. | ” | जनताराध्या | ” |
| ५३. | ” | तत्त्वप्रबोधक | ” |
| ५४. | ” | तत्त्वाभिज्ञा | ” |
| ५५. | ” | तापत्रयहर | ” |
| ५६. | ” | तापसवर्या | ” |
| ५७. | ” | त्रिगुणातीता | ” |
| ५८. | ” | तृष्णारहिता | ” |
| ५९. | ” | द्वन्द्वातीता | ” |
| ६०. | ” | दान्तस्वान्ता | ” |

| | | | |
|---|---|---|---|
| ६१. | ” | देशिकचन्द्रा | ” |
| ६२. | ” | देशोद्धारक | ” |
| ६३. | ” | धन्यजीवना | ” |
| ६४. | ” | धर्मप्रवर्तक | ” |
| ६५. | ” | धार्मिकश्रेष्ठा | ” |
| ६६. | ” | धीरस्वभाव | ” |
| ६७. | ” | निरहङ्कारा | ” |
| ६८. | ” | निर्जितषड्गुण | ” |
| ६९. | ” | निर्जितेन्द्रिया | ” |
| ७०. | ” | निःश्रेयसकर | ” |
| ७१. | ” | पतितपावना | ” |
| ७२. | ” | पण्डिताराध्या | ” |
| ७३. | ” | परिव्राट्प्रमुखा | ” |
| ७४. | ” | पातकहरणा | ” |
| ७५. | ” | फलेप्सारहिता | ” |
| ७६. | ” | फालाक्षरूपा | ” |
| ७७. | ” | ब्रह्मवर्चसा | ” |
| ७८. | ” | ब्रह्मवित्तमा | ” |
| ७९. | ” | बुधजनतोषक | ” |
| ८०. | ” | बुधनुतचरिता | ” |
| ८१. | ” | भक्तवत्सला | ” |
| ८२. | ” | भक्तिप्रचारक | ” |
| ८३. | ” | महर्षिपुङ्गव | ” |
| ८४. | ” | मलयालमौनी | ” |
| ८५. | ” | मुमुक्षुशरणा | ” |
| ८६. | ” | मुक्तिप्रदाता | ” |
| ८७. | ” | यतवाङ्मनस | ” |

८८. ” यतीन्द्रतिलका ”
८९. ” रागविदूरा ”
९०. ” रमणीयगुणा ”
९१. ” लोकमलापह ”
९२. ” लोकनिःस्पृहा ”
९३. ” वाग्यतवर्या ”
९४. ” वादविदूरा ”
९५. ” व्यासाश्रमस्थापक ”
९६. ” व्यासावतारा ”
९७. ” शमादिनिलया ”
९८. ” शान्तविग्रहा ”
९९. ” षड्रिपुजेता ”
१००. ” षडूर्मिरहिता ”
१०१. ” सततपवित्रा ”
१०२. ” संसृतिरहिता ”
१०३. ” सदमलचित्ता ”
१०४. ” सद्गतिप्रापक ”
१०५. ” हितप्रियवादी ”
१०६. ” हृत्तापहारक ”
१०७. ” क्षान्तिस्वरूपा ”
१०८. ” क्षीणवासना ”

इति श्रीमदसङ्गानन्द सद्गुरुअष्टोतरशतनाम सङ्किर्तनं समाप्तम्॥

ॐ

श्री गुरुभ्यो नमः

## श्री सद्गुरु पादुकास्तवम्

श्रीसमञ्चितमव्ययं परमप्रकाशमगोचरं
भेदवर्जितमप्रमेय मनन्तमाद्यमकल्मषम्।
निर्मलं निगमान्तमद्वय मप्रतर्क्यमबोधकं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।1।।

नादबिन्दुकलात्मकं दशनादभेदविनोदकं
मन्त्रराजविराजितं निजमण्डलान्तर्भासितम्।
पञ्चवर्णमखण्डमद्भुत मादिकारणमच्युतं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।2।।

व्योमवद्बहिरन्तरस्थितमक्षरं निखिलात्मकं
केवलं परिशुद्धमेकमजन्म हि प्रतिरूपकम्।
ब्रह्मतत्त्वविनिश्चयं निरतानुमोक्षसुबोधकं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।3।।

बुद्धिरूपमबुद्धिकं त्रितयैककूटनिवासिनं
निश्चलं निरतप्रकाशक निर्मलं निजमूलकम्।
पश्चिमान्तरखेलनं निजशुद्धसंयमिगोचरं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।4।।

हृद्गतं विमलं मनोज्ञविभासितं परमाणुकं

नीलमध्यसुनीलसन्निभ मादिबिन्दुनिजांशुकम्।
सूक्ष्मकर्णिकमध्यमस्थित विद्युदादिविभासितं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।5।।

पञ्च पञ्च हृशीकदेहमनश्चतुश्क परस्परं
पञ्चभूतसकामषट्क समीरशब्दमुखेतरम्।
पञ्चकोश गुणत्रयादि समस्तधर्मविलक्षणं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।6।।

पञ्चमुद्रसुलक्ष्यदर्शन भावमात्रनिरूपणं
विद्युदादिधगद्धगित्वरुचिर्विनोद विवर्धनम्।
चिन्मुखान्तरवर्तिनं विलसद्विलासममायकं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।7।।

पञ्चवर्ण शुचिर्विचित्र विशुद्धतत्त्वविचारणं
चन्द्रसूर्यचिदग्निमण्डल मण्डितं घनचिन्मयम्।
चित्कलापरिपूर्णमन्तर चित्समाधिनिरीक्षणं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।8।।

हंसचार मखण्डनाद मनेकवर्णमरूपकं
शब्दजालमयं चराचर जन्तुदेहनिवासिनम्।
चक्रराजमनाहतोद्भव मेकवर्णमतः परम्।
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।9।।

जन्मकर्मविलीनकारण हेतुभूतमभूतकं
जन्मकर्मनिवारकं रुचिपूरकं भवतारकम्।
नामरूपविवर्जितं निजनायकं शुभदायकं

प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।10।।

तप्तकाञ्चनदीप्यमान महाणुमात्रमरूपकं
चन्द्रिकान्तरतारकै रिवमुज्ज्वलं परमास्पदम्।
नीलनीरदमध्यमस्थित विद्युदादिविभासितं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।11।

स्थूलसूक्ष्मसकारणान्तर खेलनं परिपालनं
विश्वतैजसप्राज्ञचेतसमन्तरात्म निजांशुकम्।
सर्वकारणमीश्वरं निटलान्तराल विहारकं
प्रातरेव हि मानसान्तर्भावयेद् गुरुपादुकाम्।।12।।

इति श्रीमच्छङ्कराचार्य विरचित श्री सद्गुरु पादुकास्तवस्सम्पूर्णः



## श्रीसद्गुरुदेवजीकी आरती

जय गुरुदेव दयानिधी दीनन हितकारी, प्रभु दीनन हितकारी।
जय जय मोह विनाशक (२) भव बन्धनहारी॥ ॐ जय जय
जय गुरुदेव।
बह्मा विष्णु सदाशिव गुरु मुरति धारी, प्रभु गुरु मुरति धारी।
वेद पुराण बखानत (२) गुरु महिमाभारी॥ ॐ जय जय जय गुरुदेव।
जप तप तीरथ संयम दान बहुत दीने। प्रभु दान बहुत दीने।
गुरु बिन ज्ञान न होवे(२)कोटी यतन कीजै॥ॐजय जय जय गुरुदेव।
माया मोह नदी जल जीव बहे सारे, प्रभु जीव बहे सारे।
नाम जहाज बैठाकर (२) गुरु पल में तारे॥ ॐ जय जय जय गुरुदेव।
काम क्रोध मद मत्सर चोर बडे भारी, प्रभु चोर बडे भारी।
ज्ञान खड्ग दे करमें (२) गुरु सब संहारी॥ ॐ जय जय जय गुरुदेव।
नाना पंथ जगत में निज निज गुण गावें, प्रभु निज निज गुण गावें।
सब का सार बताकर (२) गुरु मारग लावें॥ ॐ जय जय जय गुरुदेव।
गुरु चरणामृत निर्मल सब पातक हारी, प्रभु सब पातक हारी।
वचन सुनत तम नाशे (२) सब संशय हारी॥ॐ जय जय जय गुरुदेव ।
तन मन धन सब अरपन, गुरु चरणमें कीजै, प्रभु गुरुचरणमें कीजै।
ब्रह्मानन्द परम पद (२) मोक्ष गति लीजै॥ ॐ जय जय जय गुरुदेव।

---






ॐ

सर्वेऽत्र सुखिनः सन्तु , सर्वे सन्तु निरामयाः।

सर्वे भद्राणि पश्यन्तु , मा कश्चिद्दुःखभाग्भवेत्॥

ॐ शान्तिः  शान्तिः  शान्तिः